ॐ श्रीगणेशायनमः अथसहस्रनाम ॥ कैलासशि
खरेरम्येनानादेवगणावृते नानावृक्षलताकीर्णेना
स॰ नापुष्पैरलंकृते १ चतुर्म्मण्डलसंयुक्ते शृङ्गारम
१ ण्डपेस्थिते समाधौसंस्थितंशान्तंक्रीडन्तंयोगिनीप्रि
यम् २ तत्रमौनधरन्दृष्ट्वादेवीपृच्छतिशङ्करम् दे
व्युवाच किन्त्वयाजप्यतेदेवकिन्त्वयास्मर्य्यतेसदा ३
सृष्टिःकुत्रविलीनास्तिपुनःकुत्रप्रजायते ब्रह्माण्ड।
कारणंयत्तत्किमाद्यङ्कारणम्महत् ४ मनोरथ

मयीसिद्धिस्तथावाञ्छामयीशिव तृतीयाकल्पनासि
द्धिःकोटिसिद्धीश्वरत्वकम् ५ शक्तिपातात्षट्दशाकञ्च
राचरपुरीगतिः महेन्द्रजालमिन्द्रादिजालानांरचनान्त
था ६ अणिमाद्यष्टकन्देवपरकायप्रवेशनम् नवी
नसृष्टिकरणंसमुद्रशोषणन्तथा ७ अमायाञ्चनक्ष
त्रदर्शोदिवाचन्द्रप्रकाशनम् चंद्राष्टकञ्चाष्टदिक्षुतथा
सूर्य्याष्टकंशिव ८ जलेजलमयत्वञ्चवह्नौवह्निमय
त्वकम् ब्रह्मविष्ण्वादिनिर्म्माणमिन्द्राणाङ्कारणङ्करे ९

पातालगुटिकायक्षवेतालपञ्चकन्तथा रसायनन्त
सृ॰ थागुप्तिस्तथैवचाखिलाञ्जनम् १० महामधुमतीसि
२ द्धिसिद्धयेस्तथापद्मावतीशिव तथाभोगवतीसिद्धिर्य
वत्यः सन्तिसिद्धयः ११ केनमन्त्रेणतपसाकलौपाप
समाकुले आयुष्यम्पुण्यरहितेकथम्भवतितद्वद १२
शिवउवाच विनामन्त्रम्विनास्तोत्रम्विनैवतपसाप्रिये
विनावलिंविनान्यासम्भूतशुद्धिम्विनाप्रिये १३ विना
ध्यानम्विनापूजादियन्त्रम्विनापूजादिनाप्रिये विना

क्लेशादिभिर्देविदेहदुःखादिभिर्विना १४ सिद्धिराशु
भवेद्येन तदेवकथ्यतेमया शून्येब्रह्माण्डगोलेतुप
ञ्चाशत्शून्यमध्यके १५ पञ्चशून्यस्थितातारासर्वा
न्तेकालिकास्मृता अनन्तकोटिब्रह्माण्डराजदन्ताय
केशिवे १६ स्थाप्यशून्यालयंकृत्वाकस्मवर्णविधा
यच महानिर्गुणरूपाचवाचातीतापराकला १७
क्रीडायांसेस्थितादेवीशून्यरूपंप्रकल्पयेत सृष्टेरारम्भ
कार्येतुइच्छाख्यायातयासदा १८ इच्छाशक्तिस्तुसा

स॰ ३

जातातयाकालेभविनिर्म्मितः प्रतिविम्बन्तत्रदृष्टं ज्ञाता
त्वानकिम्मुदेमिथ्यात्वसा १९ इदमेतत्किम्विशिष्टं जात
म्वित्तानकम्मुदा तदाक्रियाभिधाजातदीप्तातोमहेश्व
रि २० ब्रह्माण्डगोलेदेवेशिराजदन्तस्थितन्त्वयत् सा
क्रियास्थापयामासस्वस्वस्थानक्रमेणच २१ तवैवस्वे
च्छयादेविसामरस्यपरायणा तदिच्छाकथ्यतेदेवि य
थावदवधारय २२ युगादिसमयेदेविशिवम्परमयोगी
तमम् तदिच्छानिर्गुणंशान्तंसच्चिदानन्दविग्रहम् ॥

२३ शाश्वतंसुन्दरंसुलक्षंसर्वदेवस्तुतम्वरम् आदिनाथ
ङ्गुणातीतङ्कृत्वासंस्तुतमीश्वरम् २४ विपरीतरतन्देवं
सामरस्यपरायणाम् पूजार्थमागतन्देवगन्धर्वाप्सरसा
ङ्गणाम् २५ यक्षिणींकिन्नरीमन्यामुर्वशीप्रायायानिलो
त्तमाम् वीक्ष्यतन्माययाप्राहसुन्दरीप्राणवल्लभा २६
त्रैलोक्यसुन्दरिप्राणस्वामिनिप्राणरञ्जिनि किमागा।
तस्मत्वयायममभागपार्श्वेवामहान् २७ उक्त्वामौनधरं
शम्भुम्पूजयन्त्यप्सरोगणाः अप्सरसऊचुः संसारात्ता

स॰ ४

रित्तन्देवत्वयाविश्वजनप्रिय २५ सृष्टेरारम्भकार्य्या
र्थमुद्युक्तोसिमहाप्रभो वेश्याकृत्यमिदन्देवमङ्गला
र्थप्रगायनम् २६ प्रयाणेपित्वकालेतुसमारम्भे
प्रगायनम् एतणाद्यारम्भकालोहिवर्त्ततेशिवशङ्क
र ३० रुद्राणीकोटयःसन्तितस्याःप्रसवविन्दुतः ।
ब्रह्माणीवैष्णवीचैवमाहेशीकोटिकोटयः ३१ तव
सापरमानन्ददर्शनार्थसमुद्भवाः सञ्जातास्तायतोदे
वचास्माकंसौख्यसागर ३२ रतिंहित्वाकामिनीनां

नान्यत्सौख्यंमहेश्वर सारतिर्दृश्यतेस्माभिर्म्महत्सौ
ख्यार्थकारिका ३३ एवमेतत्त्वयास्माभिः कर्त्तव्यंभर्त्तृ
णासह एवंश्रुत्वामहादेवोध्यानावस्थितमानसः
३४ ध्यानंहित्वामाययातुप्रोवाचकालिकाम्प्रति
कालिकालिहरुण्डमालेप्रियेभैरववादिनि ३५ शिवा
रूपधरेक्रूरेघोरदंष्ट्रेभयानके त्रैलोक्यसुन्दरकरीसुन्द
र्य्यःसन्तिमेग्रतः ३६ सुन्दरीवीक्षणाङ्कुम्मीकरुकालि
प्रियेशिवे ध्यानंमुञ्चमहादेवितागच्छन्तिगृहम्प्रति ३७

तवरूपम्महाकालि महाकालप्रियङ्करं एतासान्तु
न्दरं रूपन्त्रैलोक्यप्रियकारकम् ३७ एवंमायाप्रभा
५ विष्टो महाकालो वदन्निति इतिकालवचः श्रुत्वाका
लम्प्राह च कालिका ३८ मायया छाद्य चात्मानं क्के
निजस्त्रीरूपधारिणी इतः प्रभृति स्त्रीमात्रम्भविष्यति
युगेयुगे ४० वध्या घोषधयो देवि दिवावध्वीस्वरूपता
म् एतोस्त्रीरूपमासाद्य रतिकेलिः परस्परम् ४१ प्र
तानञ्चैव सर्वेषाम्भविष्यति युगेयुगे एवंश्रापञ्च द

त्वातु पुनः प्रोवाच कालिका ४२ विपरीतरतिं कृत्वा चि
न्तयन्ति भयन्ति ये तेषाम्वरम्प्रदास्यामि नित्यन्तत्र वसा
म्यहम् ४३ इत्युक्त्वा कालिका विद्या तत्रैवान्तरधीयत
त्रिंशत्त्रिखर्वषट्वृन्दनवत्यर्बुदकोटयः ४४ दर्शनार्थिन्त
पस्तेपे सा वै कुजगताप्रिया ममप्राणप्रियादेवी हा हा प्रा
णप्रिये शिवे ४५ किङ्करोमि क्क गच्छामि इत्येवम्भ्रमसङ्कु
लः तस्याः काल्या दयाजाता मम चिन्तापरः शिवः ४६
यन्त्रप्रस्तारमुद्दिश्य काल्या दत्तानि सत्वरम् यन्त्रयागा

स. ६

न्नदारभ्यपूर्व्वम्बिंदुन्नगोचरम् ४७ श्रीचक्रंयन्त्रप्रस्तार
रचनाभ्यासतत्परः इतस्ततोभ्राम्यमाणस्त्रैलोक्यञ्च
क्रमध्यकम् ४८ चक्रपारन्दर्शनार्थङ्गोत्सवुदस्युगङ्ग
तम् भक्तप्राणप्रियादेवी महाश्रीचक्रनायिका ४९
तत्रविन्दौपरंरूपंसुन्दरंसुमनोहरम् ॥ रूपञ्ज्ञातमम
हेशानिजाग्रत्रिपुरसुन्दरी ५० रूपन्दृष्ट्वा महादेवो रा
जराजेश्वरोभवत् तस्याःकटाक्षमात्रेणतस्यारूपधरः
शिवः ५१ ॥

विनाश्रृङ्गारसंयुक्तानदाजाता महेश्वरी विनाकालंशतो
देविजगत्स्थावरजङ्गमम् ५२ नश्रृङ्गारोनशक्तित्वंका
पिनास्तिमहेश्वरि सुन्दर्य्याप्रार्थिता कालीतुष्टाप्रोवाच
कालिका ५३ सर्व्वासान्नेत्रकेशेच ममांशोऽत्रभविष्य
ति पूर्व्वावस्थास्तु देवेशि ममांशात्तिष्ठतिप्रिये ॥ ५४ ॥
सावस्थातरुणाख्यातु तदन्तेनैवतिष्ठति मद्भक्तानांम
हेशानिसदातिष्ठतिनिश्चितम् ५५ शक्तिस्तुकाठिना
जातातथारूपंनसुन्दरम् चिन्ताविष्टातुमलिजातातत्र
न

तसुन्दरी ५६ क्षणंस्थित्वाध्यानपराकालीचिन्तनत
सु॰ त्परा तदाकालीप्रसन्नाभूत्तत्क्षणार्द्धेनमहेश्वरि ५७ व
७ रम्ब्रूहि वरम्ब्रूहि वरम्ब्रूहीति सादरम् सुन्दर्युवाच॥
ममसिद्धिं वरन्देहि वरो यम्प्रार्थितो मया ५८ तादृग्रूपा
यद्रूपं यय येनशक्तिर्भविष्यति श्रीकाल्युवाच ममनाम
सहस्रन्तु मया पूर्वं विनिर्मितम् ५९ मत्स्वरूपङ्का
राख्यं महासाम्राज्यनामकम् वरदानाभिधन्नाम त्व
णार्द्धाद्वरदायकम् ६० तत्पठस्व महामाये तवशक्ति

र्भविष्यति ततःप्रभृति श्रीविद्या तन्नामपाठतत्परा ६१
तदेवनामसहस्रं सुन्दरीशक्तिदायकम् कथ्यते नामसा
हस्रं सुन्दरी सावधानमनाः शृणु ६२ सर्वसाम्राज्यमेधा
ख्यनामसहस्रकस्य च महाकालऋषिः प्रोक्तउष्णिक्छ
न्दः प्रकीर्तितम् ६३ देवता दक्षिणाकाली मायाबीजम्प्र
कीर्तितम् हूँ शक्तिः कालिकाबीजङ्कीलकम्परिकीर्तित
म् ६४ ध्यानन्तु पूर्ववत्कृत्वा साधयेत्स्वेष्टसाधनम् का
लिकावरदानादिस्वेष्टार्थे विनियोगतः ६५ कीलकेन

षडङ्गानि षड्दीर्घाङ्गेन कारयेत्॥ ॐ अस्य श्रीसर्व्वसाम्राज्य
मेधानामकालीरूपककारात्मकसहस्रनामस्तोत्रमन्त्र
स्य महाकालऋषिरनुष्टुप्छन्दः श्रीदक्षिणमहाकालीदे
वता ह्रीं बीजं हूं शक्तिः क्रीं कीलकं कालीवरदानायाखि
लेष्टार्थे जपे विनियोगः ॐ क्रीं काली क्रूं कराली च क
ल्याणी कमला कला कलावती कलाढ्या च कलापू
ज्या कलात्मिका १ कलाहृष्टा कलापुष्टा कलामस्ता
कलाकरा कलाकोटिसमाभासा कलाकोटिप्रपूजि

ता २ कलाकर्म्मि कलाधारा कलापारा कलागमा क
लाधारा कमलिनी ककारा करुणा कविः ३ ककारव
र्णसर्व्वाङ्गी कलाकोटिप्रभूषिता ककारकोटिगुणिता
ककारकोटिभूषणा ४ ककारवर्णहृदया ककारम
नुमण्डिता ककारवर्णनिलया वाक्कशब्दपरायणा ५
ककारवर्णमुकुटा ककारवर्णभूषणा ककारवर्णरू
पा च ककशब्दपरायणा ६ ककवीरास्फालरता कम
लाकरपूजिता कमलाकरनाथा च कमलाकररूपधृक् ७

कमलाकरसिद्धिस्था कमलाकरपारदा कमलाकरम
ध्यस्था कमलाकरतोषिता ८ कथङ्कारपरालापा क
थङ्कारपरायणा कथङ्कारपदान्तस्था कथङ्कारपदार्थ
भूः ९ कमलाक्षी कमलजा कमलाक्षप्रपूजिता कम
लाक्षवरोद्युक्ता ककारा कर्बुराक्षरा १० करतारा कर
च्छिन्ना करश्यामा करार्णवा करपूज्या कररता करदा
करपूजिता ११ करतोया करामर्षा कर्मनाशा करप्रि
या करप्राणा करकजा करका करकान्तरा १२ करका

चलरूपा च करकाचलशोभिनी करकाचलपुत्री च
करकाचलतोषिता १३ करकाचलगेहस्था करकाच
लरक्षिणी करकाचलसम्मान्या करकाचलकारिणी
१४ करकाचलवर्षाढ्या करकाचलरञ्जिता करका
चलकान्तारा करकाचलमालिनी १५ करकाचलभो
ज्या च करकाचलरूपिणी करामलकसंस्था च कराम
लकसिद्धिदा १६ करामलकसम्पूज्या करामलकता
रिणी करामलककाली च करामलकरोचिनी १७ क

रामलकमाताचकरामलकसेविनी करामलकवद्धे
का॰ याकरामलकप्रेषिनी १८ कञ्जनेत्राकञ्जगतिःकञ्ज
स॰ स्थाकञ्जधारिणी कञ्जमालाप्रियकरीकञ्जरूपा च
१० कञ्जजा १९ कञ्जजातिःकञ्जगतिःकञ्जहोमपरा
यणा कञ्जमण्डलमध्यस्थाकञ्जाभरणभूषिता २०
कञ्जसम्माननिरताकञ्जोत्पत्तिपरायणा कञ्जरा।
शिसमाकाराकञ्जारण्यनिवासिनी २१ करञ्जवृक्ष
मध्यस्थाकरञ्जवृक्षवासिनी करञ्जफलभूषाढ्या

करञ्जारण्यवासिनी २२ करञ्जमालाभरणा करवा
लपरायणा करवालप्रहृष्टात्माकरवालप्रियागतिः
२३ करवालप्रियाकन्याकरवालविहारिणी क
रवालमयीकर्म्माकरवालप्रियङ्करी २४ कबन्धमा
लाभरणाकबन्धराशिमध्यगा कबन्धकूटसंस्थाना
कबन्धानन्तभूषणा २५ कबन्धनादसन्तुष्टाकबन्धा
सनधारिणी कबन्धगृहमध्यस्थाकबन्धवनवासिनी
२६ कबन्धकांचीकरणी कबन्धराशिभूषणा कव

न्धमालाजयदाकवन्धदेहवासिनी २७ कवन्धासन
का० मान्याचकपालमाल्यधारिणी कपालमालामध्य
सु० स्थाकपालव्रततोषिता २८ कपालदीपसन्तुष्टाक
११ पालदीपरूपिणी कपालदीपवरदाकपालकज्जल
स्थिता २९ कपालमालाजयदाकपालजपतोषि।
णी कपालसिद्धिसंहृष्टाकपालभोजनोद्यता ३०
कपालव्रतसंस्थानाकपालकमलालया कवित्वा
मृतसाराचकवित्वामृतसागरा ३१ कवित्वसिद्धिसं

हृष्टाकवित्वादानकारिणी कविपूज्याकविगतिः क
विरूपाकविप्रिया ३२ कविब्रह्मानन्दरूपाकवित्वव्र
ततोषिता कविमानससंस्थानाकविवाञ्छाप्रपूरिणी
३३ कविकण्ठस्थिताकंह्रींकंकंकविपूर्त्तिदा क
ज्जलाकज्जलादानमानसाकज्जलप्रिया ३४ कपा
लकज्जलसमाकज्जलेशप्रपूजिता कज्जलार्णवम
ध्यस्थाकज्जलप्रियतोषिणी कपालमालाभरणाक
पालवरभूषणा ३६ कपालवरभूषाढ्याकपालच

क्रमण्डिता कपालकोटिनिलयाकपालदुर्गकारि।
का· णी ३७ कपालगिरिसंस्थानाकपालचक्रवासिनी
स· कपालपात्रसन्तुष्टाकपालार्घ्यपरायणा ३८ क
१२ पालार्घ्यप्रियप्राणाकपालार्घ्यवरप्रदा कपालचक्ररूपा
च कपालरूपमात्रगा ३९ कदलीकदलीरूपाकदली
वनवासिनी कदलीपुष्पसम्प्रीता कदलीफलमानसा
४० कदलीहोमसन्तुष्टाकदलीदर्शनोद्यता कदलीग
र्भमध्यस्थाकदलीवनसुन्दरी ४१ कदम्बपुष्पनिल

याकदम्बवनमध्यगा कदम्बकुसुमामोदाकदम्बव
नतोषिणी ४२ कदम्बपुष्पसम्पूज्याकदम्बपुष्पहोम
दा कदम्बपुष्पमध्यस्थाकदम्बफलभोजिनी ४३
कदम्बकाननान्तःस्थाकदम्बाचलवासिनी कक्षपा
कक्षपाराध्याकक्षपासनसंस्थिता ४४ कर्णपूराक
र्णनासाकर्णाढ्याकालभैरवी कलप्रीताकलहदा
कलहाकलहातुरा ४५ कर्णयक्षीकर्णवार्त्ताकथि
नी कर्णसुन्दरी कर्णपिशाचिनीकर्णमञ्जरीकपिक

त्वदा ४६ कविकल्पविरूपाढ्या कविकल्पस्वरूपिणी ॥
कस्तूरीमृगसंन्तोषा कस्तूरीस्थानाकस्तूरीमृगरूपि
णी ४७ कस्तूरीमृगसन्तोषाकस्तूरीमृगमध्यगा ॥
कस्तूरीरसनीलाङ्गीकस्तूरीगन्धतोषिता ४८ कस्तू
रीपूजकप्राणाकस्तूरीपूजकप्रिया कस्तूरीप्रेमसं
तुष्टाकस्तूरीप्राणधारिणी ४९ कस्तूरीपूजकानन्दा
कस्तूरीगन्धरूपिणी कस्तूरीमालिकारूपाकस्तूरी
भोजनप्रिया ५० कस्तूरीतिलकानन्दाकस्तूरीतिल

कप्रिया कस्तूरीहोमसन्तुष्टाकस्तूरीतर्प्पणोद्यता ।
५१ कस्तूरीमार्ज्जनोद्युक्ताकस्तूरीचक्रपूजिता कस्तू
रीपुष्पसम्पूज्याकस्तूरीचर्व्वणोद्यता ५२ कस्तूरीगर्भ
मध्यस्थाकस्तूरीवस्त्रधारिणी कस्तूरिकामोदरताक
स्तूरीवनवासिनी ५३ कस्तूरीवनसंरक्ताकस्तूरीप्रेम
धारिणी कस्तूरीशक्तिनिलयाकस्तूरीशक्तिकुण्डगा
५४ कस्तूरीकुण्डसंस्नाताकस्तूरीकुण्डमज्जना क
स्तूरीजीवसन्तुष्टाकस्तूरीजीवधारिणी ५५ कस्तूरी

परमामोदा कस्तूरीजीवनस्तमा कस्तूरीजातिभाव
स्था कस्तूरीगन्धचुम्बना ५६ कस्तूरीगन्धसंशोभ
विराजितकपालभूः कस्तूरीमदनान्तःस्था कस्तू
रीमदहर्षदा ५७ कस्तूरीकवितानाढ्या कस्तूरीगृ
हमध्यगा कस्तूरीस्पर्शकप्राणा कस्तूरीनिन्दका
न्तका ५८ कस्तूर्यामोदरसिका कस्तूरीक्रीडनोद्य
ता कस्तूरीदाननिरता कस्तूरीवरदायिनी ५९ क
स्तूरीस्थापनासक्ता कस्तूरीस्थानरञ्जिनी कस्तूरीकु

शलप्रश्ना कस्तूरीस्तुतिवन्दिता ६० कस्तूरीवन्दका
राध्या कस्तूरीस्थानवासिनी कहरूपा कहाढ्याचक
हानन्दा कहात्मभू ६१ कहपूज्या कहात्पाख्या कहहे
या कहात्मिका कहमाला कण्ठभूषा कहमन्त्रजपो
द्यता ६२ कहनामस्मृतिपरा कहनामपरायणा क
हपरायणरता कहदेवी कहेश्वरी ६३ कहहेतु कहा
नन्दा कहनादपरायणा कहमाता कहान्तःस्था कह
मन्त्रा कहेश्वरा ६४ कहगेया कहाराध्या कहध्यान

परायणा कहतन्त्रा कहकहा कहचर्य्यापरायणा
६५ कहाचारा कहगतिः कहताण्डवकारिणी क
हारण्या कहगतिः कहशक्तिपरायणा ६६ कहरा
ध्यनता कर्म्मसाक्षिणी कर्म्मसुन्दरी कर्म्मविद्याक
र्म्मगतिः कर्म्मतन्त्रपरायणा ६७ कर्म्ममात्राकर्म्म
गात्राकर्म्मधर्म्मपरायणा कर्म्मरेखानाशकर्त्रीक
र्म्मरेखाविनोदिनी ६८ कर्म्मरेखामोहकरी कर्म्मकी
र्त्तिपरायणा कर्म्मविद्या कर्म्मसारा कर्म्माधाराच

कर्म्मभूः ६९ कर्म्मकारी कर्म्महारी कर्म्मकौतुकसुन्द
री कर्म्मकाली कर्म्मतारा कर्म्मच्छिन्नाच कर्म्मदा ७०
कर्म्मचाण्डालिनी कर्म्मवेदमाताच कर्म्मभूः कर्म्मका
ण्डरतानन्ता कर्म्मकाण्डानुमानिता ७१ कर्म्मकाण्डप
रीणाहा कमठी कमठाकृतिः कमठाराध्यहृदया कम
ठाकण्ठसुन्दरी ७२ कमठासनसंसेव्या कमठी कर्म्म
तत्परा करुणाकरकान्ताच करुणाकरवन्दिता ७३ क
ठोराकरमालाच कठोरकुचधारिणी कपर्द्दिनी कपठि

नीकठिनीकङ्कभूषणा ७४ करभोरूः कठिनदा कर
भा करमालया कलभाषामयी कल्पा कल्पनाकल्प
दायिनी ७५ कमलस्था कलामाला कमलास्या क
णत्प्रभा ककुद्मिनी कष्टवती करणीयकथार्च्चिता
७६ कचार्च्चिता कचतनुः कचसुन्दरधारिणी कठो
रकुचसंलग्ना कटिसूत्रविराजिता ७७ कर्णभक्षप्रि
या कन्दा कथा कन्दगतिः कलिः कलिघ्नी कलिदूती
चकविनायकपूजिता ७८ कणकक्षानियन्त्री च

कश्चित्कविवरार्च्चिता कर्त्रीचकर्त्तृकाभूषाकारिणी
कर्णशत्रुपा ७९ करणेशी करणपा कलवाचाक
लानिधिः कलना कलनाधारा कलनाकारिका क
रा ८० कलगेया कर्कराशिः कर्कराशिप्रपूजिता क
न्याराशिः कन्यका च कन्यकाप्रियभाषिणी ८१ क
न्यकादानसन्तुष्टा कन्यकादानतोषिणी कन्यादान
करानन्दा कन्यादानग्रहेष्टदा ८२ कर्षणा कक्षदह
ना कामिता कमलासना करमालानन्दकर्त्री करमा

का॰
स॰
१७

लाप्रबोधिता ८३ करमालाशयानन्दा करमालास
मागमा करमालासिद्धिदात्री करमालाकरप्रिया ।
८४ करप्रियाकररता करदानपरायणा कलानन्दा
कलिगतिः कलिपूज्या कलिप्रसूः ८५ कलनादनि
नादस्था कलनादवरप्रदा कलनादसमाजस्था कहो
लाचकहोलदा ८६ कहोलगेहमध्यस्था कहोलवर
दायिनी कहोलकविताधारा कहोलऋषिमानिता
८७ कहोलमानसाराध्या कहोलवाक्यकारिणी क

र्त्तृरूपाकर्त्तृमयीकर्त्तृमाताचकर्त्तरी ८८ कनीया
कनकाराध्याकनीनकमयीतथा कनीयानन्दनि
लयाकनकानन्दतोषिता ८९ कनीनककराका
ष्ठाकथार्णवकरीकरी करिगम्याकरिगतिः करि
ध्वजपरायणा ९० करिनाथप्रियाकण्ठाकथान
कप्रतोषिता कमनीयाकमनकाकमनीयविभू
षणा ९१ कमनीयसमाजस्थाकमनीयव्रतप्रिया
कमनीयगुणाराध्याकपिलाकपिलेश्वरी ९२ ॥

का॰ स॰ १८

कपिलाराध्यहृदया कपिलाप्रियवादिनी कहच
क्रमन्त्रवर्णा कहचक्रप्रसूनका ९३ कएलह्रीं
स्वरूपा च कएईलह्रीं वरप्रदा कएईलह्रीं सिद्धिदा
त्री कएईलह्रीं स्वरूपिणी ९४ कएईलह्रीं मन्त्रव
र्णा कएईलह्रीं प्रसूकला कवर्गा च कपाटस्था क
पाटोद्घाटनक्षमा ९५ कङ्काली च कपाली च क
ङ्कालप्रियभाषिणी कङ्कालमो[illegible]भैरवाराध्या कङ्का
लमानसंस्थिता ९६ कङ्कालमोहतिरता कङ्काल

मोहदायिनी कलुषघ्नी कलुषहा कलुषार्तिविनाशिनी
९७ कलिपुष्पा कलादाना कशिपुः कश्यपार्चिता क
श्यपा कश्यपाराध्या कलिपूर्णा कलेवरा ९८ कलेवर
करी काञ्ची कवर्गा च करालका करालभैरवाराध्या
करालभैरवेश्वरी ९९ कराला कलनाधारा कपर्दीश
वरप्रदा कपर्दीशप्रेमलता कपर्दिमालिकायुता १००
कपर्दिजपमालाढ्या करवीरप्रसूनदा करवीरप्रिय
प्राणा करवीरप्रपूजिता १०१ कर्णिकारसमाकारा

का॰ स॰ १९

कर्णिकारप्रपूजिता करिघाग्निस्थिताकर्षाकर्षमा
त्रसुवर्णदा ९२ कलशाकलशाराध्याकषायाकरि
गानदा कपिलाकलकण्ठीचकलिकल्पलतामता
९३ कल्पलताकल्पमाताकल्पकारीचकल्पभूः क
र्पूरामोदरुचिराकर्पूरामोदधारिणी ९४ कर्पूरा
मालाभरणाकर्पूरवासपूर्त्तिदा कर्पूरमालाजय
दाकर्पूरार्णवमध्यगा ९५ कर्पूरतर्पणरताक
टकाम्बरधारिणी कपटेश्वरसम्पूज्याकपटेश्वर

रूपिणी ९६ कटुःकपिध्वजाराध्याकलापपुष्पधा
रिणी कलापपुष्परुचिराकलापपुष्पपूजिता ९७
ककचाककचाराध्याकथंब्रूमाकरालता कथङ्का
रविनिर्म्मुक्ताकालीकालक्रियाक्रतुः ९८ कामि
नीकामिनीपूज्याकामिनीपुष्पधारिणी कामिनीपु
ष्पनिलयाकामिनीपुष्पपूर्णिमा ९९ कामिनीपु
ष्पपूजार्हाकामिनीपुष्पभूषणा कामिनीपुष्पतिल
काकामिनीकुण्डचुम्बना १०० कामिनीयोगसन्तुष्टा

कामिनीयोगभोगदा कामिनीकुण्डसम्मग्ना कामि
का॰ नीकुण्डमध्यगा १११ कामिनीमानसाराध्या कामि
स॰ नीमानतोषिता कामिनीमानसञ्चारा कालिका
२० लकालिका ११२ कामा च कामदेवी च कामेशी का
मसम्भवा कामभावा कामरता कामार्त्ता कामम
ञ्जरी ११३ काममञ्जीररणिता कामदेवप्रियान्त
रा कामकाली कामकला कालिका कमलार्च्चिता
११४ कादिका कमला काली कालानलसमप्रभा

कल्पान्तदहना कान्ता कान्तारप्रियवासिनी १५
कालपूज्या कालरता कालमाता च कालिनी का
लवीरा कालघोरा कालसिद्धा च कालदा ११६ का
लाञ्जनसमाकारा कालञ्जरनिवासिनी कालऋ
द्धिः कालवृद्धिः कारागृहविमोचिनी ११७ कादिवि
द्या कादिमाता कादिस्था कादिसुन्दरी काशी कञ्ची
च काञ्चीशा काशीशा वरदायिनी ११८ क्रीम्बीजा चै
व काम्बीजा हृदयायतमस्तृता काम्या काम्यगतिः

काम्यसिद्धिदात्रीचकामभूः ११९ कामाख्याकाम
का॰ रूपाचकामचापविमोचिनी कामदेवकलारामा
स॰ कामदेवकलालया १२० कामरात्रिःकामदात्री
२१ कान्ताराचलवासिनी कालरूपाकालरातिःका
मयोगपरायणा १२१ कामसम्मर्द्दनरताकामगे
हविकाशिनी कालभैरवभार्य्याचकालभैरव
कामिनी १२२ कालभैरवयोगस्थाकालभैरवभो
गदा- कामधेनुः कामदोग्ध्रीकाममाताचकान्ति

दा १२३ कामुकाकामुकाराध्याकामुकानन्दवर्द्धि
नी कार्त्तवीर्य्याकार्त्तिकेयाकार्त्तिकेयप्रपूजिता १२४
कार्य्याकारणदाकार्य्यकारिणीकारणान्तरा का
न्तिगम्याकान्तिमयीकात्याकात्यायनीचका १२५
कामसाराचकाश्मीराकाश्मीराचाररतत्परा काम
रूपाचाररताकामरूपप्रियम्वदा १२६ कामरूपा
चारसिद्धिःकामरूपमनोमयी कार्त्तिकीकार्त्तिकारा
ध्याकाञ्चनारप्रसूनभूः १२७ काञ्चनारप्रसूनाभा

काञ्चनारप्रपूजिता काञ्चरूपा काञ्चभूमिः कां
स्यपात्रप्रभोजिनी १२८ कांस्यध्वनिमयी कामसु
न्दरी कामचुम्बना काशपुष्पप्रतीकाशा कामद्रुम
समागमा १२९ कामपुष्पा कामभूमिः कामपूज्या
च कामदा कामदेहा कामगेहा कामबीजपराय।
णा १३० कामध्वजसमारूढा कामध्वजसमास्थि
ता काश्यपी काश्यपाराध्या काश्यपानन्ददायिनी
१३१ कालिन्दीजलसङ्काशा कालिन्दीजलपूजिता ॥

कादेवपूजानिरता कादेवपरमार्थदा १३२ कार्म्म
णा कार्म्मणाकारा कामकार्म्मणकारिणी कार्म्म
णत्रोटनकरी काकिनी कारणाह्वया १३३ काव्या
मृता च कालिङ्गा कालिङ्गमर्द्दनोद्यता कालागरु
विभूषाढ्या कालागरुविभूतिदा १३४ कालाग
रुसुगन्धा च कालागरुप्रतर्प्पणा कावेरीनीरस
म्प्रीता कावेरीतीरवासिनी १३५ कालचक्रभ्रमा
कारा कालचक्रनिवासिनी काननाकाननाधारा

कारुः कारुणिकामयी १३६ काम्पिल्यवासि
का॰ नीकाष्ठाकामपत्नीचकामभूः कादम्बरीपान
स॰ रतातथाकादम्बरीकला १३७ कामवन्ध्याचका
२३ मेशीकामराजप्रपूजिता कामराजेश्वरीविद्याका
मकौतुकसुन्दरी १३८ काम्बोजकाञ्छिनदाका
स्यकाञ्चनकारिणी काञ्चनाद्रिसमाकाराका
ञ्चनाद्रिप्रदानदा १३९ कामकीर्त्तिः कामकेशी
कारिकान्तराश्रया कामभेदीचकामार्त्तिनाशिनी

कामभूमिका १४० कालनिर्णाशिनीकाव्यवनिताका
मरूपिणी कायस्थाकामसन्दीप्तिः काव्यदाकालसुन्
री १४१ कामेशीकारणवराकामेशीपूजनोद्यता का
ञ्चीनूपुरभूषाढ्याकुङ्कुमाभरणान्विता १४२ का
लचक्राकालगतिःकालचक्रमनोभवा कुन्दमध्या
कुन्दपुष्पाकुन्दपुष्पप्रियाकुजा १४३ कुजमाताकु
जाराध्याकुठारवरधारिणी कुञ्जरस्थाकुशरता कु
शेशयविलोचना १४४ कुनटीकुररीकुद्राकुरङ्गीकु

ष्टजाश्रया कुम्भीनसविभूषा च कुम्भीनसवधोद्य
का॰ ता १४५ कुम्भकर्णमनोह्लासा कुलचूडामणिः कु
स॰ ला कुलालगृहकन्या च कुलचूडामणिप्रिया १४६
२४ कुलपूज्या कुलाराध्या कुलपूजापरायणा कुलभू
षा तथा कुक्षिः कुररीगणसेविता १४७ कुलपुष्पा
कुलरता कुलपुष्पपरायणा कुलवस्त्रा कुलारा
ध्या कुलकुण्डसमप्रभा १४८ कुलकुण्डसमोल्ला
सा कुण्डपुष्पपरायणा कुण्डपुष्पप्रसन्नास्या कुण्ड

गोलोद्भवात्मिका १४९ कुण्डगोलोद्भवाधारा कुण्ड
गोलमयी कुहूः कुण्डगोलप्रियप्राणा कुण्डगोलप्र
पूजिता १५० कुण्डगोलमनोह्लासा कुण्डगोलबल
प्रदा कुण्डदेवता कुद्धा कुलसिद्धिकरा परा १५१ कुल
कुण्डसमाकारा कुलकुण्डसमानभूः कुण्डसिद्धिः।
कुण्डऋद्धिः कुमारीपूजनोद्यता १५२ कुमारीपूजक
प्राणा कुमारीपूजकालया कुमारीकामसन्तुष्टा कु
मारीपूजनोत्सुका १५३ कुमारीव्रतसन्तुष्टा कुमारी

रूपधारिणी कुमारीभोजनप्रीताकुमारीचक्रमारदा
का॰ १५४ कुमारमाताकुलदाकुलयोनिःकुलेश्वरी कु
स॰ ललिङ्गाकुलानन्दाकुलरम्याकुतर्कधृक् १५५ कु
२५ लीचक्रकुलकान्ताच कुलमार्गपरायणा कुब्जाचक्र
रुकुब्जाचक्रकुब्जुकाकुलकामदा १५६ कुलिशाङ्गी
कुब्जिकाचकुब्जिकानन्दवर्द्धिनी कुलीनाकुञ्जरगतिः
कुञ्जरेश्वरगामिनी १५७ कुलपालीकुलवतीतथैव
कुलदीपिका कुलयोगेश्वरीकुण्डाकुङ्कुमारुणवि

ग्रहा १५८ कुङ्कुमानन्दसन्तोषाकुङ्कुमार्णववासिनी।
कुसुमाकुसुमप्रीताकुलभूःकुलसुन्दरी १५९ कु
मुद्वती कुमुद्दिनी कुशलाकुलटालया कुलटालयम
ध्यस्थाकुलटासङ्गतोषिता १६० कुलटाभवनोद्यु
क्ताकुशावर्त्ताकुलार्णवा कुलार्णवाचाररताकुण्डली
कुण्डलाकृतिः १६१ कुमतीचकुलश्रेष्ठाकुलचक्रप
रायणा १६२ कूंकेंकैंशंहंनिलयाकुंद्रु कूटस्थाकूट
दृष्टिश्चकुन्तलाकुन्तलाकृति १६२ कुशलाकृतिरूपा

चकूर्च्चबीजधरा चकूः कुंकुंकुंकुंशब्दरता कुंकुंकुं
का० कुम्परायणा १६३ कुंकुंकुंशब्दनिलया कुक्कुरालय
स० वासिनी कुक्कुरासङ्गसंयुक्ता कुक्कुरानन्तविग्रहा
२९ १६४ कूर्च्चारम्भा कूर्च्चबीजा कूर्च्चजापपरायणा कुच
स्पर्शनसन्तुष्टा कुचालिङ्गनहर्षदा १६५ कुगतिघ्नी
कुबेरार्च्या कुचभूः कुलनायिका कुगायना कुचध
रा कुमाता कुन्ददन्तिनी १६६ कुगेया कुहराभासा कु
गेया कुघ्नदारिका कीर्त्तिः किरातिनी क्लिन्ना किन्नरा

किन्नरी क्रिया १६७ क्रीङ्कारा क्रीञ्जपासक्ता क्रीं ह्रूं स्त्रीं
मन्त्ररूपिणी किर्मीरितदृशापाङ्गी किशोरी च किरीटि
नी १६८ कीटभाषा कीटयोनिः कीटमाता च कीटदा
किंशुका कीरभाषा च क्रियासारा क्रियावती १६९
कींकीं शब्दपरा क्लां क्लीं क्लूं क्लैं क्लौं मन्त्ररूपिणी कांकीं
कुं कैं स्वरूपा च कः फट् मन्त्रस्वरूपिणी १७० केतकी
भूषणानन्दा केतकीभरणान्विता कैकदा केशिनी के
शी केशीसूदनतत्परा १७१ केशरूपा केशमुक्ता कैके

यीकौशिकीतथा कैरवाकैरवाह्लादा केशराकेत
का रूपिणी १७२ केशवाराध्यहृदया केशवासक्तमान
स· सा क्लैव्यविनाशिनी क्लैन्त्वक्लैम्बीजजपतोषिता १७३
२७ कौशल्या कोशलाक्षी च कोशा च कोमला तथा कोला
पुरनिवासा च कोलासुरविनाशिनी १७४ कोटिरूपा
कोटिरता क्रोधिनी क्रोधरूपिणी केका च कोकिला को
टिः कोटिमन्त्रपरायणा १७५ कोट्यनन्तमन्त्रयुता कै
रूपा केरलाश्रया केरलाचारनिपुणा केरलेन्द्रगृहस्थि

ता १७६ केदाराश्रमसंस्था च केदारेश्वरपूजिता क्रो
धरूपा क्रोधपदा क्रोधमाता च कौशिकी १७७ को
दण्डधारिणी क्रौञ्चा कौशिल्या कौलमार्गगा कौ
लिनी कौलिकाराध्या कौलिकागारवासिनी १७८
कौतुकी कौमुदी कौला कुमारी कौरवार्चिता कौण्डि
न्या कौशिकी क्रोधज्वाला भासुररूपिणी १७९ को
टिकालानलज्वाला कोटिमार्त्तण्डविग्रहा कृत्तिका कृ
ष्णवर्णा च कृस्ना कृत्या क्रियातुरा १८० कृशाङ्गी कृ

तत्कृत्याचक्रःफट्स्वाहास्वरूपिणी क्रौंक्रौंहूम्फट्
का० मन्त्रवर्णाक्रौंह्रींहूंफट्नमस्स्वधा १८१ क्रौंक्रींह्रीं
२८ ह्रींतथाहूंहूंफट्स्वाहामन्त्ररूपिणी ॥ इतिश्रीस
र्व्वसाम्राज्यमेधानामसहस्रकम् १८२ सुन्दरीशा
क्तिदानाख्यस्वरूपाभिधमेवच कथितन्दक्षिणाका
ल्याः सुन्दर्य्यैप्रीतियोगतः १ वरदानप्रसङ्गेन रह
स्यमपिदर्शितम् गोपनीयंसदाभक्त्यापठनीयम्परा
त्परम् २ प्रातर्म्मध्याह्नकालेचमध्यार्द्धरात्रयोरपि

यत्तकालेजपान्तेचपठनीयम्विशेषतः ३ यःपठेत्साध
कोधीरःकालीरूपोहिहर्षतः पठेद्वापाठयेद्वापिशृ
णोतिश्रावयेदपि ४ वाचकन्तोषयेद्वापिसभवेत्कालि
कातनुः सहस्रम्वासलीलम्वायश्चैनंमानवःपठेत् ५
सर्व्वदुःखविनिर्म्मुक्तस्त्रैलोक्यविजयीकविः मृतवन्ध्या
काकवन्ध्याकन्यावन्ध्याचवन्ध्यका ६ पुष्पवन्ध्याशू
लवन्ध्याशृणुयात्स्तोत्रमुत्तमम् सर्व्वसिद्धिप्रदातारंस
त्कविञ्चिरजीवितम् ७ पाण्डित्यंकीर्त्तिसंयुक्तंलभते॰

का॰
२५

नात्रसंशयः यंयङ्काममुपस्कृत्य कालीन्ध्यात्वाजपे
त्तवम् ८ तंतङ्काममङ्कुरेकृत्वा मन्त्रीभवतिनान्यथा
योनिपुष्पैर्लिङ्गपुष्पैः कुण्डगोलोद्भवैरपि ९ संयो
गामृतपुष्पैश्चवस्त्रदेवीप्रसूनकैः कालीपुष्पैः पीठतो
यैर्योनिक्षालनतोयकैः १० कस्तूरीकुङ्कुमैर्द्देवीन्त्व
रुवकालागुरुक्रमात् अष्टगन्धैर्धूपदीपैर्य्यवयावक
संयुतैः ११ रक्तचन्दनसिन्दूरैर्म्मत्स्यहोमादिभूषणैः
मधुभिः पायसैः क्षीरैः शोधितैः शोणितैरपि १२ म

होपचारैरक्तैश्चनैवेद्यैः सुरसान्वितैः पूजयित्वा महाका
लीम्महाकालेनलालिताम् १३ विद्याराज्ञीङ्कुहूत्कान्त्व
जप्त्वालोकञ्जपेच्छिवे कालीभक्तस्त्वेकचित्तः सिन्दूरति
लकान्वितः १४ ताम्बूलपूरितमुखो मुक्तकेशोदिगम्ब
रः शवयोनिस्थितोवीरः श्मशानसुरतान्वितः १५ शून्या
लयेबिन्दुपीठेपुष्पाकीर्णेशिवावने शयानोत्थप्रभुञ्जा
नः कालीदर्शनमाप्नुयात् १६ तत्रयद्यत्कृतङ्कर्म्म त
दनन्तफलम्भवेत् ऐश्वर्य्यं कमलासत्तानसिद्धोष्टीका

30

का॰
३०

लिकाम्बिका १७ कवित्वेतामिणीतुल्यः सौन्दर्य्ये सुन्द
री समः सिन्धोर्व्वारासमः कार्य्ये स्कन्तो स्कतिधरस्तथा
१८ वज्रासहस्रवर्षेस्त्रैलोक्यविजयाय भूत् शत्रुह
न्ताकाव्यकर्त्ताभवेच्छिवसमः कलौ १९ दिग्विदिक्
चन्द्रकर्त्ता च दिवारात्रिविपर्य्ययी महादेवसमो योगी त्रै
लोक्यस्तम्भकः क्षणात् २० गानेन तुम्बुरुस्साक्षाद्दा
नेकर्णसमो भवेत् गजाश्वरथपत्तीनामस्वाणामधिपः
कृती २१ आयुष्येषु भृसुण्डी च जरापलितनाशकः

वर्षषोडशवान्भूयात्सर्व्वकाले महेश्वरि २२ ब्रह्माण्ड
गोले देवेशि न तस्य दुर्लभं क्वचित् सर्व्वं हस्तगतं भूया
द्वात्र कार्य्या विचारणा २३ कुलपुष्पयुतं दृष्ट्वा तत्र का
लीं विचिन्त्य च विद्याराज्ञीं तु सम्पूज्य पठेन्नाम सहस्र
कम् २४ मनोरथमयी सिद्धिस्तस्य हस्ते सदा भवेत् प
रदारान्समालिङ्ग्य सम्पूज्य परमेश्वरीम् २५ हत्वा हत्ति
कया योगं कृत्वा जप्त्वा स्तवं पठेत् योनिं वीक्ष्य जपेत्स्तो
त्रं कुबेरादधिको भवेत् २६ कुण्डगोलोद्भवं गद्यसवर्णा

का॰ ३१

क्रं होमयेन्निशि पितृभूमौ महेशानि विधिरेखाम्प्रमा
ज्जयेत् २७ तरुणीं सुन्दरीं रम्यां चञ्चलाङ्गीमगर्वि
ताम् समानीय प्रयत्नेन संशोध्य न्यासयोगतः २८
प्रसूनमन्त्रेसंस्थाप्य पृथिवीं कषितां चरेत् मूलच
क्रं तु सम्भाव्य देव्यास्तारणं सं प्युतम् २९ सम्पूज्य पर
मेशानि सङ्कल्प्य तु महेश्वरि जप्त्वा स्तुत्वा महेशानीं प्र
णवं संस्मरेच्छिवे ३० अष्टोत्तरशतैर्यो नि म्त्र मन्त्रा तु
न्यायत्नतः संयोगी स्तुपजप्त्वा वं सर्वविद्याधिपो भवेत् ३१

शून्यागारे शिवारण्ये शिवदेवालये तथा शून्यदेशे तडा
गे च गङ्गागर्भे चतुष्पथे ३२ श्मशाने पर्वतप्रान्ते एक
लिङ्गे शिवामुखे मुण्डयोनौ कृतौ स्नात्वा गेहे वेश्यागृ
हे तथा ३३ कुट्टिनीगृहमध्ये च कदलीमण्डपे तथा
पठेत्सहस्रनामाख्यं स्तोत्रं सर्वार्थसिद्धये ३४ अरण्ये
शून्यगर्त्ते च रणे शत्रुसमागमे प्रजपेत्तु ततो नामका
ल्पाख्यं च सहस्रकम् ३५ बलानन्दपरो भूत्वा पठित्वा
कालिकास्तवम् कालीं सञ्चिन्त्य प्रजपेत्पठेन्नाम स

हस्रकम् ३६ सर्व्वसिद्धीश्वरो भूयाद्वाञ्छासिद्धीश्व
का. रो भवेत् मुण्डचूडकयोर्योनित्वचि चैव वा कोमले शि
२२ वे ३७ विष्टरे शववस्त्रे वा पुष्पवस्त्रासनेपि वा मु
क्तकेशो दिशावासा मैथुनोपायने स्थितः ३८ जप्त्वा
कालीम्पठेत्स्तोत्रं खेचरीसिद्धिभाग्भवेत् चिकुरं यो
गमासाद्य मुक्तोत्सारणमेव च ३९ जप्त्वा श्रीदक्षिणा
ण्डाङ्कालीं शक्तिपातशतम्भवेत् लतां स्पृशन् जपित्वा
च रमित्वा तर्पयन्नपि ४० आलोकय दिशावासः प

रशक्तिम्विशेषतः स्तुत्वा श्रीदक्षिणां कालीं योनिस्व
करगाञ्चरेत् ४१ पठेन्नामसहस्रं यः स शिवादधिको
भवेत् लतामन्तरेषु जप्त्वैवं स्तुत्वा कालीङ्गिराकुलः ४२
दशावधानो भवति मासमात्रेण साधकः कालरात्र्या
म्महारात्र्याम्वीररात्र्यामपि प्रिये ४३ महारात्र्याञ्च
तुर्द्दश्यामष्टम्यां संक्रमेपि वा कुहूपूर्णेन्दुशुक्रेषु भौ
मामायान्दिशामुखे ४४ नवम्यां मङ्गलदिने तथा कु
लतिथौ शिवे कुलस्तोत्रं प्रयत्नेन पठेन्नामसहस्रकम् ४५

सोऽदर्शनो भवेदाशु किन्नरीसिद्धिभाग्भवेत् पश्चिमाभि
का॰ मुखं लिङ्गं स्वयम्भूत्यम्पुरातनम् ४६ तत्र स्थित्वा जपे
२२ ल्लोकं सर्व्वकामाप्तये शिवे भौमवारे निशीथे वाऽथ मा
वस्यादिने शुभे ४७ माषभक्तबलिं छागं गङ्गं सरान्त्र
ञ्च पायसम् दग्ध मीनं शोणितञ्च दधिपिण्डकं गुडाई
कम् ४८ बलिन्दत्वा जपेत्त्वष्टोत्तरसहस्रकम् दे
वगन्धर्व्वसिद्धैश्चैः सेवितां सुरसुन्दरीम् ४९ लभेद्दे
वेशि मासेन तस्य चासनसंहतिः हस्तत्रयम्भवेदूर्ध्वं त्वा

त्र कार्य्या विचारणा ५० हेलया लीलया भक्त्या कालीं लो
ति नरस्तु यः ब्रह्मादीन्स्तम्भये देवि माहेशीम्मोहयेत्क्ष
णात् ५१ आकर्षयेन्महाविद्यान्दशपूर्वान्त्रियामतः
कुर्वीत विस्तु निर्म्माणं यमादीनान्तु मारणम् ५२
भ्रूव सुद्वाटयेन्नूनं स्वच्छिन्नतनतान्नरः मेषमाहिष
मार्ज्जारखरछागनरादिकैः ५३ खड्गीस्सूकरकापो
तैश्छिद्रिभैरशशकैःर्पलैः शोणितैः सास्थिमांसैश्च का
रण्डैर्गधपायसैः ५४ कादम्बरीसिन्धुमद्यैःस्वरारिष्टै

स्वसासवैः योनिस्तालितो येस्वयोनिलिङ्गामृतैरपि
का॰ ५५ स्वजातकुसुमैः पूज्यां जपान्ते तर्प्पयेच्छिवाम् स
३४ र्व्वसाम्राज्यनाम्ना तु तत्त्वानन्दा स्वशक्तितः ५६ शक्त्या
लभन् पठेत्स्तोत्रं काली रूपो दिनत्रयात् दक्षिणाका
लिका तस्य गेहे तिष्ठति नान्यथा ५७ वेश्यालनागृहे
गत्वा तस्यास्तुम्बनतत्परः तस्यायोनौ मुखन्दत्वा तद्
सम्बिलिहन् जपेत् ५८ तदन्ते नामसाहस्रम्पठेद्भक्ति
परायणः कालिकादर्शनन्तस्य भवेदेव त्रियामतः ५९

न्तत्पापाश्चगृहे गत्वा मकारपञ्चकान्वितः प्रसूनमन्त्रे
सेस्यापापाक्तिन्यासपरायणः ६० पात्राणांसाधनं
कृत्वा दिग्वस्त्रान्तां समाचरेत् सम्भाव्य चक्रनन्मूले
तत्र मावरणान्जपेत् ६१ शतम्भाले शतङ्कोशे शतं सि
न्दूरमण्डले शतत्रयं कुचद्वन्द्वे शतन्नाभौ महेश्वरि ६२
शतं योनौ महेशानि संयोगे च शतत्रयम् जपेत्तत्र महे
शानि तदन्ते च पठेत्स्तवम् ६३ शतावधानो भवति मा
समात्रेण साधकः मातङ्गिनीं समानीय किम्वा कापा

का०
३५

लिनीं शिवे ६४ दन्तमालाजपेत्कार्य्या गले धार्य्या न्न
मुण्डजा नेत्रपद्मे योनिचक्रं शक्तिचक्रं स्ववक्त्रके ६५
कृत्वा जपेन्महेशानि मुण्डयन्त्रम्प्रपूजयेत् मण्डास
नस्थितो वीरो मकारपञ्चकान्वितः ६६ अन्यामालि
ङ्ग्य प्रजपेदन्यां संचुम्ब्य वै पठेत् अन्यां सम्पूजयेत्तत्रान्य
न्यां सम्मर्द्दयन्जपेत् ६७ अन्यायोनौ शिवन्दत्वा पु
नः पूर्ववदाचरेत् एवं ध्यानसहस्रेषु शक्तिपातशतेषु
च ६८ राजा भवति देवेशि मासपञ्चकयोगतः यक्वी

शक्तिमानीय गानशक्तिपरायणाम् ६९ कालाचा
रमतेनैव तस्या योनिम्बिकासयेत् तत्र जिह्वाम्प्रद
त्वा तज्जपेन्नामसहस्रकम् ७० नृकपाले तत्र दी
पं ज्वालयित्वा नैव जपेत् महाकविवरो भूयान्नात्र
कार्य्याविचारणा ७१ कामार्त्तां शक्तिमानीय योनौ
तम्मूलचक्रकम् विलिख्य परमेशानि तत्र मन्त्रं लिखे
द्विवे ७२ तल्लिहन्प्रजपेद्देवि सर्वशास्त्रार्थतत्ववि
त् अश्रुतानि च शास्त्राणि वेदादीन्पाठयेद्ध्रुवम् ७३

विनान्यासैर्व्विना पाठैर्व्विना ध्यानादिभिः प्रिये चत
र्वेदाधिपो भूत्वा त्रिकालज्ञस्त्रिवर्षतः ७४ चतर्व्विप
ञ्चपाण्डित्यन्तस्य हस्तगतं क्षणात् शिवाबलिः प्र
दातव्या सर्व्वदा शून्यमण्डले ७५ कालीध्यानं मन्त्र
चिन्ता नीलसाधनमेव च सहस्रनामपाठश्च काली
नामप्रकीर्त्तनम् ७६ भक्तस्य कार्य्यमेतावदन्यद
भ्युदयं विदुः वीरसाधनकर्म्मं शिवापूजा बलि
स्तथा ७७ सिन्दूरतिलको देवि वेश्यालापो निरन्त

रम् वेश्यागृहे निशाचारो रात्रौ पर्य्यटनं लग्नन्तथा।
७८ शक्तिपूजा योनिदृष्टिः खड्गहस्तो दिगम्बरः मु
क्तकेशो वीरवेशो कुलमूर्त्तिधरो नरः ७९ कालीभ
क्तो भवेद्देवि नान्यथा स्तोममाप्नुयात् इत्थसाधारीयोनि
लेही सम्विदासवचूर्णितः ८० वेश्यालतासमायो
गान्मासात्कल्पलता स्वयम् वेश्याचक्रसमायोगा
त्कालीचक्रसमं स्वयम् ८१ वेश्यादेहसमायोगात्
कालीदेहसमं स्वयम् वेश्यामध्यगतं वीरं सदाप॰

प्णामि सा पञ्चकम् ८२ एवं वदति सा काली तस्माद्देश्या
का॰ वरा मता वेश्याकन्या तथा पीठजातिभेदकुलक्रमा
३७ त् ८३ अकुलक्रमभेदेन ज्ञात्वा चापि कुमारिकाम्
कुमारीम्पूजयेद्भक्त्या जपान्ते भवने प्रिये ८४ पठेत्स्तो
मसहस्रं यः कालीदर्शनभाग्भवेत् भक्त्या पूज्य कुमा
रीञ्च वेश्याकुलसमुद्भवाम् ८५ वस्त्रहेमादिभिस्तो
ष्य यत्नात्स्तोत्रम्पठेच्छिवे त्रैलोक्यविजयी भूयाद्दिवा
चन्द्रप्रकाशकः ८६ यद्यद्दत्तं कुमार्यै च तदनन्तफल

म्भवेत् कुमारीपूजनफलं मया वक्तुन्न शक्यते ८७
चाञ्चल्यादुरितं द्विञ्चित्तम्पतामयमञ्जलिः एका
चेत्पूजिता बाला द्वितीया पूजिता भवेत् ८८ कुमा
र्य्यैः शक्तयश्चैव सर्व्वमेतच्चराचरम् शक्तिमानीय तत्रा
त्रे न्यासजालम्प्रविन्यसेत् ८९ वामभागे च संस्थाप्य
जपेत्स्तोत्रसहस्रकम् सर्व्वसिद्धीश्वरो भूयात्स्तोत्रकार्य्या
विचारणा ९० श्मशानस्थो भवेत्तस्यां गलितं विकु
र्व्वैत दिगम्बरः सहस्रञ्च सुर्य्ये सुप्तं समानयेत् ९१

स्ववीर्य्येणाप्लुतंकृत्वाइत्येकम्प्रजनन्कुनेत पूज्यध्या
का॰ २८ त्वा महाभक्त्यास्तमापालोनरः पठेत् ५२ नखके
शंस्ववीर्य्यञ्च यद्यत्सम्मार्ज्जनीगतम् मुक्तकेशो
दिगावासो मूलमन्त्रः पुरःसरः ५३ कुजवारेमध्य
रात्रेहोमंकृत्वाश्मशानके पठेन्नामसहस्रंयः पृथ्वी
णाकर्षणम्भवेत् ५४ पुष्पयुक्तेभगेदेविसंयोगान
न्दतत्परः पुनश्चिकुरमासाद्य मूलमन्त्रञ्जपन्शिवे
५५ चिताबह्नौमध्यरात्रेवीर्य्यमुत्सार्य्ययत्नतः का

लिकाम्पूजयेत्तत्रपठेन्नामसहस्रकम् ५६ पृथ्वीशा
कर्षणंकुर्य्यान्नात्रकार्य्याविचारणा कदलीवनमासा
द्यलक्षमात्रञ्जपेन्नरः ५७ मधुमत्यास्वयन्देव्यासेव्य
मानःस्मरोपमः श्रीमधुमतीत्युक्तातथास्यावरजङ्ग
मान् ५८ आकर्षिणींसमुच्चार्य्यठएठंस्वाहासमन्वरेत्
त्रैलोक्याकर्षिणीविद्यातस्यहस्तेसदाभवेत् ५९ नदीपु
रीन्द्ररत्नानिहेमहीशैलम्भूरुहान् आकर्षयत्यमुनि
पिंसमेरुञ्चदिगन्ततः १०० अलभ्यानिचवस्तूनिहरा

र्ध्वमिश्चलादपि वृत्तान्तञ्चसहस्रस्यानाद्दहस्यञ्चिदुषाम
का॰ पि १ राज्ञ्चकथयतेषांसत्यंसत्वरमादिशेत् द्वितीय
२५ वर्षपाठेनभवेत्पद्मावतीश्रुभा १०२ ॐह्रींपद्मावति
परत्नतस्त्रैलोक्यनामच वार्ताञ्चकथद्वन्द्वं स्वाहान्तो
मन्त्रईरितः १०३ अस्यविल्यादिकानाञ्चत्रैलोक्येया
दृशीभवेत् सर्व्वम्वदतिदेवेशी त्रिकालज्ञःकविश्श्रु
मः १०४ त्रिवर्षम्पठतोदेविलभेत्भोगवतीङ्कुलाम्
महाकालेनदृष्टोपिचितामध्यगतोपिवा १०५ तस्या

दर्शनमात्रेणचिरञ्जीवीनरोभवेत् मृतसञ्जीवि
नीत्युक्तामृतमुत्थापयद्द्वयम् १०६ स्वाहान्तोमन्त्र
राख्यातोमृतसञ्जीवनात्मकः चतुर्व्वर्षम्पठेयस्तु
स्वप्नसिद्धाततोभवेत् १०७ ॐह्रींस्वप्नवाराहिकालि
स्वप्नेकथयोच्चरेत् अमुकस्यामुकन्देहिंक्लींस्वाहा
न्तोमन्त्रमीतः १०८ स्वप्नसिद्धाचतुर्व्वर्षातस्यस्वप्नेस
दास्थिता चतुर्व्वर्षस्यपाठेनचतुर्व्वेदाधिपोभवेत्
१०९ तदुक्तजलसंयोगान्मूर्खःकाव्यङ्करोतिच त

सावाक्यपरिचयान्मूर्त्तिविंशतिकाव्यताम् ११० म
त्तकेन्तुकरंकृत्वावरबाणीमितिब्रुवन् साधकोवा
ञ्छयाकुर्य्यात्तत्तथैवभविष्यति १११ ब्रह्माण्डगोल
केयाश्चयाःकाश्चित्तुमतीतले समस्तास्सिद्धयोदेवि
करामलकवद्भवेत् ११२ साधकोस्मृतिमावेणया
वन्त्यसन्तिसिद्धयः स्वयमायान्तिपुरतोजपादी।
नान्तुकाकथा ११३ विदेशवर्त्तिनोभूत्वावर्त्तन्तेचे
टकाइव अमायाञ्चन्द्रसन्दर्शञ्चन्द्रग्रहणमेवच ११४

अष्टम्याम्पूर्णचन्द्रत्वञ्चन्द्रसूर्य्याष्टकन्तथा अष्ट
दिक्षुतथाष्टौचकरोत्येवमहेश्वरि ११५ अणिमा।
खेचरत्वञ्चचराचरपुरीगतिम् पादुकाखङ्गवेता
लयक्षिणीगुटिकादयः ११६ तिलकोगुप्तताद्दश्य
ञ्चराचरकथानकम् मृतसञ्जीविनीसिद्धिर्गुटि
काचरसायनम् ११७ उड्डीनसिद्धिर्देवेशि षष्टिसि
द्धीश्वरत्वकम् तस्यहस्तेवसेद्देविनात्रकार्य्याविचा
रणा ११८ कैतौवादुन्दुभौवस्त्रेवितानेचेष्टनेग

हे भित्तौच फलके देविलेख्यम्मूलमन्त्रञ्चयत्नतः ११९
मध्येचक्रन्दशाङ्गोक्तम्परितोनामलेखनम् तद्धा
का. रणान्महेशानि त्रैलोक्यविजयीभवेत् १२० ए।
४१ कोहिप्रातस्साहस्रन्निर्जित्यचरणाङ्कणे पुनरा
यातिचमुखंस्वगृहम्प्रतिपार्व्वति १२१ एकोहि
प्रातस्सन्दर्शीलोकानाम्भवतिध्रुवम् कार्य्योम
हेशानिसद्धीपतिनिवारणे भूतप्रेतग्रहादीना
रक्षसाम्ब्रह्मरक्षसाम् १२३ वेतालानाम्भैरवाणां
कलशेस्थाप्ययत्नेननामसाहस्रकम्पठेत् १२२

स्कंदवैनायकादिकान् नाशयेत्क्षणमात्रेणना
त्रकार्य्याविचारणा १२४ भस्माभिमन्त्रितंकृत्वा
ग्रहग्रस्तेविलेपयेत् भस्मसङ्लेपणादेवसर्व्वग्र
हविनाशनम् १२५ नवनीतञ्चाभिमन्त्र्यस्त्रीणान्द
द्यान्महेश्वरि वन्ध्यापुत्रप्रदाहेविनात्रकार्य्याविचा
रणा १२६ कण्ठेवावामबाहौवायोनौवाधारणाच्छि
वे बहुपुत्रवतीनारीसुभगाजायतेध्रुवम् १२७ पु
रुषोदक्षिणाङ्गेतुधारयेत्सर्व्वसिद्धये बलवान्कीर्त्ति

मानधन्यो धार्म्मिकः साधकः कृती १२८ बहुपुत्रो रथा
का० नाञ्च राज्ञानामधिपः सुधीः कामिनीकर्षणोद्युक्तः क्री
४२ ञ्च दक्षिणकालिके १२९ क्रीं स्वाहा प्रजपेन्मन्त्रमयुतन्त्वा
मपाठकः आकर्षणञ्च रे देवि जलखेचरभूगतान् १३०
वशीकरणकामोहि हूं हूं ह्रीं ह्रीं च दक्षिणे कालिके पू
र्व्वबीजानि सर्व्वं तत्प्रजपन् पठेत् १३१ उर्व्वशीमपि व
शयेन्नात्र कार्य्या विचारणा क्रीञ्च दक्षिणकालिके स्वा
हायुक्तञ्जपेन्नरः १३२ पठेन्नामसाहस्रन्तु त्रैलोक्यमप्या

रयेद्ध्रुवम् सद्भक्ताय प्रदातव्या विद्या राज्ञि शक्तभेदिने १३३
सद्विनीताय शान्ताय दान्तायातिगुणाय च भक्ताय ज्ये
ष्ठपुत्राय गुरुभक्तिपराय च १३४ वैष्णवाय प्रशुद्धा
य शिवाबलिरताय च वेश्यापूजनयुक्ताय कुमारीपू
जकाय च १३५ दुर्गाभक्ताय रौद्राय महाकालप्रजापि
ने अद्वैतभावयुक्ताय कालीभक्तिपराय च १३६ देयं
सहस्रनामाख्यं स्वयङ्काल्या प्रकाशितम् गुरुदैवतम
न्त्राणां महेशस्यापि पार्व्वति १३७ शक्तभेदेन मन्त्रेन्मन्त्रं

का·
४३

सशिवःसगणाधिपः योमन्त्रम्भावयेन्मन्त्री सशिवोमा
त्र संशयः १३८ सशाक्तोवैस्नवस्सौरः सएवपूर्णादीक्षि
तः श्रेयोग्यायनदातव्यं सिद्धिरोधःप्रजायते १३९
वेश्यास्त्रीनिन्दकायाथ सुरासम्वित्प्रनिन्दके सुरामु
खीमन्तुंस्मृत्वा सुराचारोभविष्यति १४० वाग्देवता
घोरेश्वासापरघोरे चहूम्वदेत घोररूपेमहाघोरे मुखी
भीमपदम्वदेत १४१ भीषणस्तुपषष्ठ्यन्तं हेतखीम
पुरोशिवे शिववह्निपुगास्वेद्रूं ह्रैंक वचमन्त्रभवेत १४२

एतस्यस्मरणादेवदुष्टानाञ्च मुखेसुरा श्रवतीर्णाभवे
द्वैविदुष्टानामभद्रनाशिनी १४३ खलायपरतन्त्रायप
रनिन्दापरायच भ्रष्टायदुष्टसत्वायपरवादरताय
च १४४ शिवाभक्तायदुष्टायपरदाररतायच नस्तो
त्रन्दर्शयेद्देविशिवभक्तायहत्याकरोभवेत् १४५
कालिकानन्दहृदयःकालिकाभक्तिमानसः का
लीभक्तोभवेत्सोहिभन्यद्रूपःसएवतु १४६ कलौ
कालीकलौकालीकलौकालीवरप्रदा कलौकाली

का॰
४४

कलौकालीकलौकालीतुकेवला १४७ विल्वपत्र
सहस्राणिकरवीराणिचैवतथा प्रतिनाम्नापूजयेद्धि
तेनकालीवरप्रदा १४८ कमलानांसहस्रन्तुप्रति
नाम्नासमर्पयेत् चक्रंसम्पूज्यदेवेशिकालिकावर
माप्नुयात् १४९ मन्त्रत्तोभयुक्तोनैवकलशस्यज
लेनच नाम्नाप्रसेचयेद्देविसर्व्वत्तोभविनाशकृत्
१५० तथामस्तकन्देविसहस्रमाहरेद्बुती सहस्रना
म्नासम्पूज्यकालीवरमवाप्नुयात् १५१ चक्रम्बिलि

ख्यदेहस्यन्यारयेत्कालिकातन्तु कालैपनिवेदितंय
यत्तत्देशाम्भक्षयेच्छिवे १५२ दिव्यदेहधरोभूत्वाका
लीदेहेस्थिरोभवेत् नैवेद्यनिन्दकानदुष्टान्दृष्ट्वान्
त्यन्तिभैरवाः १५३ योगिन्यश्चमहावीरारक्तपानो
द्यताःप्रिये मांसास्थिचर्म्मणोयुक्ता भक्षयन्तिनसंश
यः १५४ तस्मान्ननिन्दयेद्देविमनसाकर्म्मणागिरा अ
न्यथाकुरुतेयस्तुतस्यनाशोभविष्यति १५५ क्रमदीक्षा
युक्तानाञ्चसिद्धिर्भवतिनान्यथा मन्त्रत्तोभश्चवा भया

न्तीणायुर्व्वीभवेद्ध्रुवम् १५६ पुत्रहारीस्त्रियोहारी
का० राज्यहारीभवेद्ध्रुवम् क्रमदीक्षायुतोदेविकमाद्राज्य
४५ मवाप्नुयात् १५७ एकवारम्पठेद्देविसर्व्वपापविना
शनम् द्विवारञ्चपठेद्योहिवाञ्छाम्विन्दतिनित्यशः
१५८ त्रिवारञ्चपठेद्यस्तुवागीशसमताम्ब्रजेत् च
तुर्वारम्पठेद्देविचतुर्व्वर्गाधिपोभवेत् १५९ पञ्चवा
रम्पठेद्देविपञ्चकामाधिपोभवेत् षड्वारञ्चपठेद्दे
विषडैश्वर्य्याधिपोभवेत् १६० सप्तवारम्पठेत्तत्र।

कामानाञ्चिन्तितंलभेत् वसुवारम्पठेद्देविदिगीशो
भवतिध्रुवम् १६१ नववारम्पठेद्देविनवनाथसमोभ
वेत् दशवारङ्कीर्त्तयेद्योदशार्हःखेचरेश्वरः १६२ विं
शद्वारङ्कीर्त्तयेद्यःसर्व्वैश्वर्य्यमयोभवेत् पञ्चविंशति
वारैस्तुसर्व्वचिन्ताविनाशकः १६३ पञ्चाशद्वारमा
वर्त्यपञ्चभूतेश्वरोभवेत् शतवारंकीर्त्तयेद्यःशता
ननसमानधीः १६४ शतपञ्चकमावर्त्यराजराजेश्व
रोभवेत् सहस्रावर्त्तनाद्देविलक्ष्मीरावृणुतेस्वयम् १६५

त्रिसहस्रंसमावर्त्यत्रिनेत्रसदृशोभवेत् पञ्चसाहस्र
मावर्त्यकामकोटिविमोहनः १६६ दशसहस्रावर्त्त
नैर्भवेद्दशमुखेश्वरः पञ्चविंशतिसाहस्रैश्चत्रिंश
तिसिद्धिप्रद १६७ लक्षावर्त्तनमात्रेणलक्ष्मीपतिस
मोभवेत् लक्षत्रयावर्त्तनात्तुमहादेवम्बिजेष्यति १६८
लक्षपञ्चकमावर्त्यकलापञ्चकसंयुतः दशलक्षा
वर्त्तनात्तुदशविद्येश्वरोभवेत् पञ्चाशल्लक्षमावर्त्य
महाकालसमोभवेत् १७० कोटिमावर्त्तयेयस्तुका

लीम्पश्यतिचक्षुषा वरदानोद्युक्तकराम्महाकालस
मन्विताम् १७१ प्रत्यक्षम्पश्यतिशिवेतस्यदेहोभवेद्
ध्रुवम् श्रीविद्याकालिकातारात्रिशक्तिविजयीभवे
त् १७२ विपेर्द्धिपिञ्चसम्मार्ज्यकिङ्करत्वाम्विसृज्यच
महाराज्यमवाप्नोतिनात्रकार्याविचारणा १७३ त्रि
शक्तिविषयेदेविक्रमदीक्षाप्रकीर्त्तिता क्रमदीक्षायुतो
देविराजाभवतिनिश्चितम् १७४ क्रमदीक्षाविहीनस्य
फलम्पूर्व्वमिहेरितम् क्रमदीक्षायुतोदेवेशिवएवनचा

का० ५७

परः १७५ क्रमदीक्षासमायुक्तः काल्याक्षसिद्धिदा भवे
त् क्रमदीक्षाविहीनस्य सिद्धिहानिः पदे पदे १७६ यु
हो जन्मवतामध्ये धन्यः क्रमयुतः कलौ तत्रापि धन्यो
देवेशि नामसाहस्रपाठकः १७७ दशाकाली विधौ देवि
स्तोत्रमेतत्सदा पठेत् सिद्धिम्विन्दति देवेशि नात्र कार्य्या
विचारणा १७८ काली काली महाविद्या कलौ काली
च सिद्धिदा कलौ काली च सिद्धा च कलौ काली वरप्रदा
१७९ कलौ काली साधकस्य दर्शनार्थं समन्वयता कलौ

कालीकेवल्लास्यान्नात्र कार्य्या विचारणा १८० नान्यवि
द्या नान्यविद्या नान्यविद्या कलौ भवेत् कलौ काली
म्विहायाथ यः कश्चित्सिद्धिकामुकः १८१ सतश
म्विना देवि रतिसम्भोगमिच्छति कलौ कालीम्विना
देवि रोति यः कश्चित्सिद्धिमिच्छति १८२ सनीलसाध
नन्त्यक्त्वा परिभ्रमति सर्व्वतः कलौ कालीम्विहाया
थ यः कश्चिन्मोक्षमिच्छति १८३ गुरुध्यानमपरित्य
ज्य सिद्धिमिच्छति साधकः कलौ कालीम्विहायाथ

यः कश्चिद्राज्यमिच्छति १८४ सभोजनमपरित्यज्य
भिक्षुवृत्तिमभीप्सति स धन्यः स च वित्तानीस एव
सुरपूजितः १८५ स दीक्षितः सुखी साधुः सत्यवा
दी जितेन्द्रियः स वेदवक्ता स्वाध्यायी नात्र कार्य्या वि
चारणा १८६ शिवरूपगुरुन्ध्यात्वा शिवरूपगुरुं स्म
रेत् सदाशिवः स एव स्यान्नात्र कार्य्या विचारणा १८७
स्वस्मिन् कालीन्तु सम्भाव्य पूजयेज्जगदम्बिकाम् ॥
त्रैलोक्यविजयी भूयान्नात्र कार्य्या विचारणा १८८

गोपनीयङ्गोपनीयङ्गोपनीयम्प्रयत्नतः रहस्या
तिरहस्यञ्च रहस्यातिरहस्यकम् १८९ श्लोकार्द्धम्पा
दमात्रम्वा पादार्द्धञ्च तदर्द्धकम् नामार्द्धं यः पठेद्देवि न
वन्ध्यदिवसं न्यसेत् १९० पुस्तकम्पूजयेद्भक्त्या त्वरित
म्फलसिद्धये न च मारीभयन्तत्र न चाग्निर्व्वायुसम्भव
म् १९१ न भूतादिभयन्तत्र सर्व्वत्र सुखमेधते कुङ्कुमा
लक्तकेनैव रोचनागुरुयोगतः १९२ भूर्ज्जपत्रे लिखे
त्पुस्तं सर्व्वकामार्थसिद्धये १९३ इति गदितमशेषका

49

का॰ ५९

लिकावर्णरूपं प्रपठति यदिचभक्त्यासर्व्वसिद्धीश्वरः
स्यात् अभिनवसुखकामः सर्व्वविद्याभिरामो भ
वतिसकलसिद्धिः सर्व्ववीरासमृद्धिः १५४ इतिका
सङ्क्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि १५५ इ
तिकालीसहस्रनामस्तोत्रं सम्पूर्णम् इति श्रीशा
क्तप्रमोदे ॥
सं॰ १९५२
जम्बू ॥

**NATIONAL MISSION FOR MANUSCRIPTS**
**MANUS DATA**

DSO 00017930

| | |
|---|---|
| Record No. | Organization / Individual 7930 |

| | |
|---|---|
| Name of the Institution: Oriental Research Library University Campus, Hazaratbal, Srinagar. Personal Collection | Communication Address: Department of Libraries and Research Municipal Complex, Karanagar, Srinagar. |
| Title of the Text: Kālī Sahasranāma stotra<br>Other Title | Bundle No:……………………. Acc. No./Manuscript No. 2464 |
| Author: N.G | No. of Folios 49 (54) Pages 98 |
| Commentary: No | Size of Mss. 10.4 x 18.1 cm<br>Material: Paper/palm leaf/birch-bark/cloth/leather/others |
| Commentator: No | Missing portion No |
| Language: Samskrit | Illustrations No<br>Complete/Incomplete |
| Script: Devanāgarī | Condition: Good/bad/brittle/worm eaten.Fungus/Stuck |
| Date of Manuscript: 1885-AD | Source of Catalogue: Descriptive/Hand list/Alphabetical/Index card |
| Key words: Stotra | Colour of Manuscripts: cream |
| Subject: Stotra | Remarks: good Bound. |

[signature] .05.06